# श्रीमधुसूदनस्तोत्रम्

श्रीगणेशाय नमः ॥

ओमिति ज्ञानमात्रेण रोगाजीर्णेन निर्जिता ।
कालनिद्रां प्रपन्नोऽस्मि त्राहि मां मधुसूदन ॥ १॥

न गतिर्विद्यते चान्या त्वमेव शरणं मम ।
पापपङ्के निमग्नोस्मि त्राहि मां मधुसूदन ॥ २॥

मोहितो मोहजालेन पुत्रदारगृहादिषु ।
तृष्णया पीड्यमानोऽस्मि त्राहि मां मधुसूदन ॥ ३॥

भक्तिहीनं च दीनं च दुःखशोकातुरं प्रभो ।
अनाश्रयमनाथं च त्राहि मां मधुसूदन ॥ ४॥

गतागतेन श्रान्तोस्मि दीर्घसंसारवर्त्मसु ।
येन भूयो न गच्छामि त्राहि मां मधुसूदन ॥ ५॥

बहवो हि मया दृष्टाः क्लेशाश्चैव पृथक् पृथक् ।
गर्भवासे महद्दुःखं त्राहि मां मधुसूदन ॥ ६॥

तेन देव प्रपन्नोऽस्मि त्राणार्थं त्वत्परायणः ।
दुःखार्णवपरित्राणात् त्राहि मां मधुसूदन ॥ ७॥

वाचा यच्च प्रतिज्ञातं कर्मणा नोपपादितम् ।
तत्पापार्जितमग्नोऽस्मि त्राहि मां मधुसूदन ॥ ८॥

सुकृतं न कृतं किञ्चिद्दुष्कृतं च कृतं मया ।
संसारघोरे मग्नोऽस्मि त्राहि मां मधुसूदन ॥ ९॥

देहान्तरसहस्रेषु चान्योन्यभ्रामितो मया ।
तिर्यक्त्वं मानुषत्वं च त्राहि मां मधुसूदन ॥ १०॥

वाचयामि यथोन्मत्तः प्रलपामि तवाग्रतः ।
जरामरणभीतोऽस्मि त्राहि मां मधुसूदन ॥ ११॥

यत्र यत्र च यातोऽस्मि स्त्रीषु वा पुरुषेषु च ।

तत्र तत्राचला भक्तिस्त्राहि मां मधुसूदन ॥ १२॥

गत्वा गत्वा निवर्तन्ते चन्द्रसूर्यादयो ग्रहाः ।
अद्यापि न निवर्तन्ते द्वादशाक्षरचिन्तकाः ॥ १३॥

ऊर्ध्वपातालमर्त्येषु व्याप्तं लोकं जगत्त्रयम् ।
द्वादशाक्षरात्परं नास्ति वासुदेवेन भाषितम् ॥ १४॥

द्वादशाक्षरं महामन्त्रं सर्वकामफलप्रदम् ।
गर्भवासनिवासेन शुकेन परिभाषितम् ॥ १५॥

द्वादशाक्षरं निराहारो यः यः पठेद्धरिवासरे ।
स गच्छेद्वैष्णवं स्थानं यत्र योगेश्वरो हरिः ॥ १६॥

इति श्रीशुकदेवविरचितं मधुसूदनस्तोत्रं सम्पूर्णम् ॥